## वैयाकरणसिद्धान्तकौमुद्यां

# कृदन्तप्रकरणम्

## [१४] कृत्प्रत्ययाः


१३.०९.२०१९

Neelesh Bodas

neelesh.bodas@gmail.com





Email: sanskritfromhome@vyomalabs.in



www.sanskritfromhome.in



येनाक्षरसमाम्नायमधिगम्यमहेश्वरात्
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥

वाक्यकारं वररुचिं भाष्यकारं पतञ्जलिम्
पाणिनिं सूत्रकारञ्च प्रणतोऽस्मि मुनित्रयम् ॥

मुनित्रयं नमस्कृत्य तदुक्तीः परिभाव्य च
वैयाकरणसिद्धान्तकौमुदीयं विरच्यते ॥

# पुनःस्मारणम् - अस्य वर्गस्य प्रयोजनानि

vyoma
॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam · Value Education · Technology

- सिद्धान्तकौमुद्याः कृदन्तप्रकरणस्य सर्वेषां सूत्राणां विस्तारेण अध्ययनम् ।
- यत्र आवश्यकं तत्र अन्येषां व्याख्यानानां साहाय्येन शास्त्राध्ययनम् ।
- सर्वेभ्यः धातुभ्यः यथायोग्यं कृत्प्रत्यययोजनम् ।
- कृत्प्रत्यये परे रूपनिर्माणप्रक्रियायाः अभ्यासः ।
- अष्टाध्याय्याः तृतीयाध्यायस्य कण्ठस्थीकरणम् ।

# पुनरावर्तनम्

- "सार्वधातुकत्वम्" तथा "शित्त्वम्" एतौ भिन्नौ विषयौ । परन्तु कृत्-प्रत्ययानां विषये द्वौ शब्दौ समानार्थकौ ।
- ६.१.४५ आदेच उपदेशेऽशिति - उपदेशे एजन्तस्य धातोः आत्वं स्यात्, न तु शिति । शित्-प्रत्ययस्य विवक्षा नास्ति चेत्, प्रत्ययविधानात् पूर्वमेव आकारादेशः भवति, ततः यथायोग्यं प्रत्ययः विधीयते ।
- निषेधस्य प्रकारद्वयम् - **पर्युदासः**, **प्रसज्यप्रतिषेधश्च** । यत्र एकपदार्थस्य निषेधं कृत्वा विपरीतपदार्थः अपेक्ष्यते, तत्र **पर्युदासपक्षः** स्वीक्रियते । यत्र क्रियायाः निषेधः क्रियते, विपरीतक्रिया च नैव अपेक्ष्यते, तत्र **प्रसज्यप्रतिषेधपक्षः** स्वीक्रियते । ६.१.४५ आदेच उपदेशेऽशिति इत्यत्र निर्दिष्टः आकारादेशः प्रत्ययविधानात् पूर्वमेव इष्यते, अतः अत्र **प्रसज्यप्रतिषेधपक्षः** आश्रीयते ।
- (परिभाषा ७) नानुबन्धकृतम् अनेजन्तत्वम् - धातोः एजन्तत्वनिर्णये अनुबन्धस्य चिन्तनं न करणीयम् । ३.४.१९ उदीचां माङो व्यतीहारे अत्र "मेङ्" धातोः "माङ्" इति निर्देशः अस्य ज्ञापकम् ।
- ६.१.५० मीनातिमिनोतिदीङां ल्यपि च ; ६.१.५१ विभाषा लीयतेः - एषाम् आत्वं स्यात् ल्यपि, चकाराद् अशिति एच्-निमित्ते । लीलीङोः आत्वं वा स्यात् एच्-विषये ल्यपि च ।
- ७.१.६५ आङो यि , ७.१.६६ उपात् प्रशंसायाम् - आङः परस्य लभेः नुम् स्यात् यादौ प्रत्यये विवक्षिते । उपात्परस्य लभेर्नुम् स्याद्यादौ प्रत्यये विवक्षिते प्रशंसायां गम्यमानायाम् ।

# धातुभ्यः विहिताः प्रत्ययाः



## सनादिप्रत्ययाः

सन्, यङ्,
णिच्, यक्,
आय, ईयङ्,
णिङ्

## विकरणप्रत्ययाः

स्य, तास्, सिप्, आम्,
च्लि, सिच्, क्स, चङ्,
अङ्, चिण्, यक्, शप्,
श्यन्, श्नु, श, श्नम्, उ,
श्ना, शानच्, शायज्, अङ्

## तिङ्प्रत्ययाः

तिप्, तस्, झि
सिप्, थस्, थ
मिप्, वस्, मस्
त, आताम्, झ,
थास्, आथाम्, ध्वम्,
इट्, वहि, महिङ्

## कृत्प्रत्ययाः

तव्यत्, तव्य, अनीयर्,
...
...
...
...
क्त्वा, णमुल्, तुमुन्

# कृत्-संज्ञा



३.१.९१ धातोः

३.१.९२ तत्रोपपदं सप्तमीस्थम्

३.१.९३ कृदतिङ्

...

३.४.७६ क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः

३.४.७७ लस्य

३.१.९१ धातोः इति प्रत्याख्याते एतदेव सूत्रम् अधिकाररूपेण स्वीक्रियते ।

## ३.१.९३ (३७४) कृदतिङ्

(कौमुदी) संनिहिते धात्वधिकारे तिङ्भिन्नः प्रत्ययः कृत्संज्ञः स्यात् ।

(काशिका) अस्मिन् धात्वधिकारे तिङ्वर्जितः प्रत्ययः कृत्संज्ञको भवति ।

(न्यासः) कृत्संज्ञायां सत्यां कृत्तद्धितसमासाश्च १.२.४६ इति प्रातिपदिकसंज्ञा ।

(पदमञ्जरी) अतिङिति किम् ? ..... तिङन्तस्य कृदन्तं प्रातिपदिकमिति प्रातिपदिकसंज्ञायां पचेरन् - नलोपः प्राप्नोति, पपाच ब्राह्मणी - टाप् प्राप्नोति, सर्वत्र च स्वाद्युत्पत्तिः प्रसज्येत ।

# कृत्प्रत्ययानां प्रकारद्वयम्

vyoma ॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam · Value Education · Technology

## धातोः साक्षात् विहिताः कृत्प्रत्ययाः

एते कृत्-प्रत्ययाः कृदन्तप्रकरणस्य सूत्रैः साक्षात् धातोः पाठिताः सन्ति ।

- ३.१.९६ तव्यत्तव्यानीयरः - सर्वेभ्यः धातुभ्यः "तव्यत्", "तव्य", "अनीयर्" एते प्रत्ययाः विधीयन्ते ।
- ३.१.९७ अचो यत् - अजन्तेभ्यः धातुभ्यः "यत्" प्रत्ययः भवति ।
- ३.२.१४४ अपे च लषः - "अप + लष्" धातोः घिनुण्-प्रत्ययः भवति ।

## लकाराणाम् आदेशरूपेण विहिताः कृत्प्रत्ययाः

एते कृत्-प्रत्ययाः धातोः विहितस्य लकारप्रत्ययस्य आदेशरूपेण विधीयन्ते ।

- **शतृ, शानच्** - एतौ प्रत्ययौ **लट्लकारस्य** तथा **लृट्लकारस्य** आदेशरूपेण विधीयेते ।
  - पठ् + लट् → पठ् + शतृ ।
  - लभ् + लृट् → लभ् + स्य+ शानच् ।
- **कानच्, क्वसुँ** - एतौ प्रत्ययौ **लिट्लकारस्य** आदेशरूपेण विधीयेते ।
  - सु + लिट् → सु + सु + लिट् → सु + सु + कानच् ।
  - पा + लिट् → प + पि + लिट् → प + पि + क्वसुँ ।

# कृत्प्रत्ययेषु अनुबन्धाः / इत्संज्ञकवर्णाः

vyoma ॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam · Value Education · Technology

कृत्प्रत्ययेषु उपस्थिताः ये वर्णाः -

- प्रक्रियायाः आरम्भे एव लुप्यन्ते
- प्रक्रियायां स्वयं प्रत्यक्षरूपेण भागं न स्वीकुर्वन्ति परन्तु अप्रत्यक्षरूपेण किञ्चित् परिवर्तनं कारयन्ति

ते **अनुबन्धाः / इत्संज्ञकवर्णाः** नाम्ना ज्ञायन्ते ।

| | | |
|---|---|---|
| घञ् = ~~घ्~~ + अ + ~~ञ्~~ | अच् = अ + ~~च्~~ | अण् = अ + ~~ण्~~ |
| पच् + घञ् → पच् + अ → पाक | पच् + अच् → पच् + अ → पच | पच् + अण् → पच् + अ → पाच |

# उच्चारणार्थ प्रयुक्ताः वर्णाः तथा अनुबन्धाः




कृत्प्रत्ययेषु विद्यमानाः ये वर्णाः प्रक्रियायाः आरम्भे लुप्यन्ते, ते सर्वे "इत्संज्ञकवर्णाः" इति न आवश्यकम् ।

## कृत्प्रत्यये विद्यमानाः आरम्भे लुप्यमानाः वर्णाः

### उच्चारणार्थं स्थापिताः वर्णाः

- **णिनि, इनि, मनिन्** इत्यत्र नकारोत्तरः इकारः
- **क्विप्, विच्, ण्वि** इत्यत्र वकारोत्तरः इकारः
- **घिनुण्, इनुण्** इत्यत्र नकारोत्तरः उकारः
- **तुमुन्, खमुञ्** इत्यत्र मकारोत्तरः उकारः

### इत्संज्ञकवर्णाः / अनुबन्धाः

- **क्तवतु, क्वसु** इत्यत्र उकारः
- **ण्वि, ण, अण्** इत्यत्र णकारः
- **ड, डु** इत्यत्र डकारः
- **थकन्, त्वन्, तवेन्** इत्यत्र नकारः

# इत्संज्ञकवर्णानां प्रयोजनम्

vyoma ॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam · Value Education · Technology

**इत्संज्ञकवर्णस्य प्रयोजनम् भवेदेव ।**

**विना प्रयोजनम् वर्णस्य इत्संज्ञा न भवति ।**

यदि कश्चन वर्णः प्रक्रियायाः प्रारम्भे लुप्यते, परन्तु तस्य अग्रे किमपि कार्यं न विद्यते, तर्हि सः केवलं उच्चारणार्थः / स्पष्टप्रतिपत्त्यर्थः ज्ञेयः । तस्य इत्संज्ञा न भवति ।

# कृत्प्रत्ययेषु इत्संज्ञाविधायकानि सूत्राणि

vyoma ॥ वाचं धेनुमुपासीत ॥ Saṃskṛtam · Value Education · Technology

| | | |
|---|---|---|
| १.३.२ उपदेशेऽजनुनासिक इत् | अनुनासिकस्वरः इत्संज्ञकः भवति । | क्तवतुँ, शतृँ |
| १.३.३ हलन्त्यम् | अन्तिमव्यञ्जनम् इत्संज्ञकं भवति । | टक्, अङ्, अच्, इञ्, ञ्युट्, अण्, यत्, नन्, अप्, खल्, खश्, अनीयर् |
| १.३.६ षः प्रत्ययस्य | प्रत्ययादिषकारः इत्संज्ञकः भवति । | षाकन्, ष्ट्रन्, ष्वुन् |
| १.३.७ चुटू | प्रत्ययादिः चवर्गीयवर्णः, टवर्गीयवर्णः इत्संज्ञकः भवति । | चानश्, ञ्युट्, ट, ड, ण |
| १.३.८ लशक्वतद्धिते | प्रत्ययादिः लकारः, शकारः, कवर्गीयवर्णः इत्संज्ञकः भवति । | ल्युट्, शानच्, क्त्वा, खच्, ग्स्नु, घ, ङ्वनिप् |
| १.३.९ तस्य लोपः | इत्संज्ञकवर्णस्य (प्रक्रियायाः आरम्भे एव) लोपः भवति । यथा - पठ् + शतृ → पठ् + अत् → ... → पठत् । | |

उ ऋ क् ख् ग् घ् ङ् च् ञ् ट् ड् ण् त् न् प् र् ल् श् ष्

# कृत्प्रत्ययेषु इत्संज्ञायाः प्रयोजनम्

vyoma
॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam · Value Education · Technology

## कृदन्तस्य निर्माणम्

कृत्-प्रत्ययेषु विद्यमानैः इत्संज्ञकवर्णैः कृदन्तप्रक्रियायां कश्चन विशिष्टः आदेश / आगमः / निषेधः विधीयते ।

यथा - "क्त्वा" प्रत्ययः "**कित्**" अस्ति अतः अस्मिन् प्रत्यये परे "भूत्वा" इत्यत्र अङ्गस्य गुणः निषिध्यते ।

## कृदन्तस्य स्वरनिर्धारणम्

कृत्-प्रत्ययेषु विद्यमानैः इत्संज्ञकवर्णैः कृदन्तस्य उच्चारणे प्रयुक्ताः उदात्तादिस्वरभेदाः निर्दिश्यन्ते ।

यथा - "तव्यत्" प्रत्ययः "**तित्**" अस्ति, अतः तव्यत्-प्रत्ययान्तस्य "पठितव्यः" शब्दस्य उच्चारणसमये तकारोत्तरः अकारः "स्वरितः" उच्चार्यते ।

## कृदन्तात् अन्यप्रत्ययविधानम्

कृत्-प्रत्ययेषु विद्यमानैः इत्संज्ञकवर्णैः कृदन्तशब्दात् पदनिर्माणसमये कश्चन विशिष्टः प्रत्ययः / आगमः विधीयते ।

यथा - "शतृ" प्रत्ययः "**ऋदित्**" अस्ति, अतः शतृ-प्रत्ययान्तस्य "पठत्" इति प्रातिपदिकस्य पुँल्लिङ्गस्य द्वितीयैकवचनस्य रूपसिद्धौ "पठन्तम्" इत्यत्र नुमागमः विधीयते ।

# कृदन्तप्रक्रियायाम् इत्संज्ञाप्रयोजनम्

vyoma ॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam · Value Education · Technology

| | | |
|---|---|---|
| शित् / अशित् | गणविकरणम् / इडागमः | ज्ञा + श्ना + शतृ → जानत् । पठ् + इट् + क्त्वा → पठित्वा । |
| कित् / गित् / ङित् | गुणवृद्धिनिषेधः | भू + क्त्वा → भूत्वा । जि + ग्स्नु → जिष्णु । भिद् + अङ् → भिदा । |
| कित् | सम्प्रसारणम् | वच् + क्त्वा → उक्त्वा । |
| ञित् / णित् | वृद्ध्यादेशः | कृ + ण्यत् → कार्य । भू + घञ् → भाव्य । |
| डित् | टिलोपः | पङ्क + जन् + ड → पङ्क + ज् + अ → पङ्कज । |
| घित् | कुत्वम् | पच् + घञ् → पाक । युज् + घिनुण् → योगिन् । |
| खित् | पूर्वपदकार्यम् | काली + मन् + खश् → कालिम्मन्यः । |
| पित् | तुगागमः | प्र + कृ + ल्यप् → प्र + कृ + तुक् + ल्यप् → प्रकृत्य । |

# कृदन्तस्य स्वरनिर्धारणे इत्संज्ञाप्रयोजनम्

vyoma ॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam · Value Education · Technology

| | | | |
|---|---|---|---|
| चित् | ६.१.१६३ चितः | कृदन्तस्य अन्तोदात्तत्वम् । | लभ् + शानच् → लभमान । |
| ञित् | ६.१.१९७ ञ्नित्यादिर्नित्यम् | कृदन्तस्य आद्युदात्तत्वम् । | पच् + घञ् → पाक । |
| तित् | ६.१.१८५ तित्स्वरितम् | प्रत्ययस्य आदिस्वरितत्वम् । | भू + तव्यत् → भवितव्य । |
| | ६.१.२१३ यतोऽनावः | द्व्यचः कृदन्तस्य आद्युदात्तत्वम् । | भू + यत् → भव्य । |
| नित् | ६.१.१९७ ञ्नित्यादिर्नित्यम् | कृदन्तस्य आद्युदात्तत्वम् । | लु + वुन् → लवक । |
| | ६.२.५० तादौ न निति कृत्यतौ | गतिसंज्ञकस्य आदिस्वरस्य प्रकृतिस्वरविधानम् । | प्र + कृ + तृन् → प्रकर्तृ । |
| पित् | ३.१.४ अनुदात्तौ सुप्पितौ | प्रत्ययस्य आद्यनुदात्तत्वम् । | कृ + अप् → कर । |
| रित् | ६.१.२१७ उपोत्तमं रिति | कृदन्तस्य उपोत्तमस्वरस्य उदात्तत्वम् । | पठ् + अनीयर् → पठनीय |
| लित् | ६.१.१९३ लिति | प्रत्ययपूर्वस्वरस्य उदात्तत्वम् । | चिकीर्ष + ण्वुल् → चिकीर्षक । |

# कृदन्तात् पदनिर्माणसमये इत्संज्ञाप्रयोजनम्

vyomalabs
॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam · Value Education · Technology

| | | | |
|---|---|---|---|
| टित् | ४.१.१५ टिड्ढाणञ्... | ङीप् इति स्त्रीप्रत्ययः । | हा + ल्युट् + ङीप् → हायनी । |
| षित् | ४.१.४१ षिद्गौरादिभ्यश्च | ङीष् इति स्त्रीप्रत्ययः । | नृत् + ष्वुन् + ङीष् → नर्त्तकी । |
| उदित् / ऋदित् | ४.१.६ उगितश्च | ङीप् इति स्त्रीप्रत्ययः । | कृ + शतृँ + ङीप् → कुर्वती ।<br>कृ + क्तवतुँ → ङीप् → कृतवती । |
| | ७.१.७० उगिदचां सर्वनामस्थाने अधातोः | पुँल्लिङ्गे सर्वनामस्थाने नुमागमः । | पठ् + शतृँ + जस् → पठन्तः ।<br>पठ् + क्तवतुँ + औ → पठितवन्तौ । |

# कृत्प्रत्ययानाम् आदेशविधानम् १

vyomalabs ॥वाचं धेनुमुपासीत॥ Saṃskṛtam · Value Education · Technology

- इत्संज्ञकवर्णस्य / उच्चारणार्थं प्रयुक्तस्य वर्णस्य लोपात् अनन्तरम् प्रत्यये किञ्चन परिवर्तनं भवितुम् अर्हति ।

**७.१.१ (१२४७) युवोरनाकौ**

युवु एतयोरनुनासिकयोः क्रमात् अन अक एतावादेशौ स्तः ।

(काशिका) यु वु इत्येतयोः उत्सृष्टविशेषणयोः **अनुनासिकयणोः** प्रत्यययोर्ग्रहणम्, तयोः स्थाने यथासङ्ख्यम् अन अक इत्येतावादेशौ भवतः । ... अनुनासिकयणोः इति किम्? ऊर्णाया युस् ५.२.१२३ ऊर्णायुः । भुजिमृङ्भ्यां युक्त्युकौ (उणादि. ३.२१) भुज्युः, मृत्युः इति । एवम् आदीनां हि यणोऽनुनासिकत्वं न प्रतिज्ञायते, प्रतिज्ञानुनासिक्याः पाणिनीयाः ।

यत्र इत्संज्ञालोपात् / उच्चारणार्थं प्रयुक्तानां वर्णानां लोपात् अनन्तरम् "यु" / "वु" इति अवशिष्यते, तत्र तयोः क्रमेण "अन" / "अक" एतौ आदेशौ भवतः । अदन्तौ एतौ आदेशौ ।

- ल्यु / ल्युट् / ख्युन् / ज्युट् / ण्युट् / युच् / → यु → अन ।
- ण्वुच् / ण्वुल् / वुञ् / वुन् / ष्वुन् → वु → अक

यथा - लिख् + ल्युट् → लेखन । लिख् + ण्वुल् → लेखक ।

# कृत्प्रत्ययानाम् आदेशविधानम् २

vyoma ॥ वाचं धेनुमुपासीत ॥ Saṃskṛtam · Value Education · Technology

## ६.१.६७ (३७५) वेरपृक्तस्य

अपृक्तस्य वेः लोपः स्यात् ।

**१.२.४१ अपृक्तः एकाल् प्रत्ययः** - इत्संज्ञालोपात् / उच्चारणार्थं प्रयुक्तानां वर्णानां लोपात् अनन्तरम् यस्मिन् प्रत्यये एकः एव वर्णः अवशिष्यते सः प्रत्ययः **अपृक्तः** अस्ति इति उच्यते । यथा - कि, डु, णच्, केन्, अ ।

"वि" इत्यस्मात् जायमानस्य "व्" इति अपृक्तप्रत्ययस्य लोपः भवति । एतादृशः प्रत्ययः "सर्वापहारी" नाम्ना ज्ञायते ।




- सेना + नी + **क्विप्** → सेना + नी + ० → सेनानी ।
- प्र + भज् + **ण्वि** → प्र + भज् + ० → प्रभाज् ।
- घृत + स्पृश् + **क्विन्** → घृत + स्पृश् + ० → घृतस्पृश् ।

१.२.४६ कृत्तद्धितसमासाश्च इति प्रातिपदिकसंज्ञा ।

**सर्वापहारिणः कृत्प्रत्ययाः**

विच्, विट्, क्विप्, क्विन्, ण्वि, ण्विन्

# कृत्प्रत्ययानाम् आदेशविधानम् ३

vyoma ॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam · Value Education · Technology

| ७.१.३७ (३३३२) समासेऽनञ्पूर्वे क्त्वो ल्यप् | अव्ययपूर्वपदे अनञ्समासे क्त्वो ल्यबादेशः स्यात् । |
| --- | --- |

"ल्यप्" इति ~~प्रत्ययः~~ आदेशः

**१.१.५६ (३३३२) स्थानिवदादेशोऽनल्विधौ**

आदेशः स्थानिवत्स्यात्, न तु स्थान्यलाश्रयविधौ ।

(काशिका) किम् उदाहरणम् ?
धात्वङ्गकृत्तद्धिताव्ययसुप्तिङ्पदादेशाः ।... कृदादेशः कृद्वद् भवति - प्रकृत्य, प्रहृत्य । क्त्वो ल्यबादेशे कृते ह्रस्वस्य पिति कृति तुक् ६.१.७१ इति तुग् भवति ।

कृत्-प्रत्ययस्य स्थाने विहितः आदेशः स्थानिवद्भावेन कृत्-प्रत्ययसंज्ञकः भवति ।
अतएव क्त्वा-प्रत्ययस्य आदेशः "ल्यप्" स्वयमपि "कृत्-प्रत्ययः" नाम्ना ज्ञायते ।

ल्यप् इति **पित्-प्रत्ययः**, अतएव प्र + कृ + ल्यप् इत्यत्र ६.१.७१ ह्रस्वस्य पिति कृति तुक् इति तुगागमं कृत्वा प्रकृत्य इति रूपं सिद्ध्यति ।

क्त्वा-प्रत्ययस्य "कित्"धर्मः ल्यप्-प्रत्यये अपि आरोप्यते । अतः ल्यप्-प्रत्ययः **कित् अपि अस्ति** । अतएव प्र + भू + य → प्रभूय इत्यत्र १.१.५ क्ङिति च गुणः निषिध्यते ।

(परिभाषा ५४) **अन्तरङ्गान् अपि विधीन् बहिरङ्गो ल्यप् बाधते** अनया परिभाषया क्त्वा-प्रत्ययस्य "ल्यप्" इति आदेशविधानम् बहिरङ्गे सत्यपि अन्तरङ्गविधेः अपेक्षया प्रथमं करणीयम् ।

# कृत्प्रत्ययानां दृश्यरूपम्, सारूप्यम्

vyoma ॥ वाचं धेनुमुपासीत ॥ Saṃskṛtam · Value Education · Technology

- **दृश्यरूपम्** = इत्संज्ञकवर्णानां तथा च उच्चारणार्थं प्रयुक्तानां वर्णानां लोपात् अनन्तरम्, आवश्यकं चेत् प्रत्ययादेशं कृत्वा यत् अवशिष्यते / जायते तत् ।

  यथा - शतृ → अत् । घिनुण् → इन् । ल्यप् → य । ल्युट् → अन ।
  ण्वुल् → अक । क्विप् → ० ।

- **सारूप्यम्** = दृश्यरूपस्य समानता ।
  - घ / अप् / ड / क / ण / अच् / अण् → अ । एते सर्वे सरूपप्रत्ययाः ।
  - क्तिन् → ति । क्त → त । क्तवतु → तवत् । एते सर्वे विरूपप्रत्ययाः ।

(परिभाषा ८)
**नानुबन्धकृतमसारूप्यम्**

यत्र केवलम् अनुबन्धेन वैरूप्यं जायते, परन्तु अनुबन्धलोपात् अनन्तरं सारूप्यं विद्यते, तत्र सारूप्यमेव ज्ञातव्यम् । इत्युक्ते, द्वयोः प्रत्यययोः सारुप्यनिर्णयसमये इत्संज्ञकवर्णांना चिन्तनं न करणीयम् ।




अष्टाध्यायीजगन्माता यस्य चित्तात् समुत्थिता
वेदानामुपकाराय तस्मै पाणिनये नमः ॥

शब्दब्रह्म समाराध्य कृतवान् यो विलक्षणम्
सर्वाश्चर्यमिदं शास्त्रं तस्मै पाणिनये नमः ॥

येन धौता गिरः पुँसां विमलैः शब्दवारिभिः
तमश्चाज्ञानजं भिन्नं तस्मै पाणिनये नमः ॥



QUESTIONS/DOUBTS?

Email us @

sanskritfromhome

@vyomalabs.in








- For downloading course-materials, login @ www.sanskritfromhome.in
- Subscribe to our youtube channel @ vyoma-samskrta-pathasala
- Buy our Samskrita-learning products @ www.digitalsanskritguru.com
- Support our cause for Samskrita-Samskriti @ www.vyomalabs.in